# संस्कृतव्यवहारसाहस्री

## SAMKRITA VYAVAHARA SAHASRI

(A collection of one thousand sentences)

संस्कृतभारती
देहली - बेङ्गलूरु

# विषयः Contents

# संस्कृत-व्यवहार-साहस्री

# SAMSKRITA-VYAVAHARA-SAHASREE

## १. शिष्टाचारः Etiquettes

| | |
|---|---|
| १. हरिः ओम् । | Hello. |
| २. सुप्रभातम् / नमस्ते / नमस्कारः । | Good morning, Good afternoon/Good evening. |
| ३. शुभरात्रिः । | Good night |
| ४. धन्यवादः । | Thank you. |
| ५. स्वागतम् । | Welcome. |
| ६. क्षम्यताम् । | Excuse / pardon me. |
| ७. चिन्ता मास्तु । | Don't worry. |
| ८. कृपया । | Please. |
| ९. पुनः मिलामः । | Let us meet again. |
| १०. अस्तु । | All right / Okay. |
| ११. श्रीमन् । | {While addressing only} Sir. |
| १२. आर्ये / महोदये । | {While addressing only} Madam. |
| १३. साधु साधु / समीचीनम् । | Very good. |

---

**Note :** In the place of "युष्मद् शब्दः" (त्वम्), here "भवत्-शब्दः" (भवान्/भवती) is used for the convenience of beginners of conversational Samskrita.

## २. परिचयः Introduction

१. भवतः नाम किम् ? What is your name ? (masc.)

२. भवत्याः नाम किम् ? What is your name ? (fem.)

३. मम नाम ........ My name is '........'

४. एषः मम मित्रं..... This is my friend '.......'

५. भवान् किं करोति ? What do you do ?

६. अहम् अध्यापकः अस्मि । (पु॰) I am a teacher. (m)

७. एषा मम सखी .... । This is my friend.

८. भवती किं करोति ? What do you do ?

९. अहं विद्यार्थिनी अस्मि । (स्त्री॰) I am a student. (f)

| पु॰ स्त्री॰ | | पु॰ स्त्री॰ | |
|---|---|---|---|
| अधिकारी, अधिकारिणी | Officer. | अभियन्ता, अभियन्त्री | Engineer |
| प्राध्यापकः, प्राध्यापिका | Professor. | लिपिकारः, लिपिकारिणी | Clerk. |
| न्यायवादी, न्यायवादिनी | Lawyer. | विक्रयिकः, विक्रयिका | Salesman. |
| व्याख्याता, व्याख्यात्री | Lecturer | | |

१०. भवान्/भवती कुत्र कार्यं करोति ? Where do you work?

११. अहं यन्त्रागारे कार्यं करोमि । I work in a factory.

| | | | |
|---|---|---|---|
| कार्यालये | in an office | महाविद्यालये | in a college. |
| वित्तकोषे | in a bank. | चिकित्सालये | in a hospital. |
| माध्यमिकविद्यालये | in a high school | | |

१२. भवान्/भवती कस्यां कक्ष्यायां पठति ? In which class do you study ?

१३. अहं स्नातक प्रथम/द्वितीय/तृतीय वर्षे पठामि । I am studying in I / II / III year of graduation.

१४. भवान्/भवती किं पठति ? What do you study?

१५. अहं विज्ञानं/वाणिज्यं/कलां पठामि । I study science/commerce/arts.

१६. भवतः/भवत्याः गृहं कुत्र अस्ति ? Where is your house?

१७. मम गृहमपि जयनगरे अस्ति । My house is also in Jayanagar.

१८. जयनगरे कुत्र ? Where in Jayanagar ?

१९. न्यायालयभवनस्य पार्श्वे या वीथी अस्ति तस्याम् । In the lane beside the court-building.

२०. आगच्छतु कदापि मम गृहम् । Come to my house sometime.

२१. आम्, अवश्यम् आगमिष्यामि । Yes, I'll certainly come.

२२. कथम् अस्ति भवान्/भवती ? How are you ?

२३. अहं कुशली/कुशलिनी अस्मि । I am fine.

२४. कुशलं किम् ? How are you ?

२५. आम्, कुशलम् । Yes, I am fine.

२६. गृहे सर्वे कुशलिनः किम् ? Is everyone fine at home?

२७. आम्, सर्वे कुशलिनः । Yes, all are fine.

२८. कः विशेषः/का वार्ता/कोऽपि विशेषः? What news?

२९. भवान् एव वदतु । You only tell.

३०. भवान्/भवती कुतः आगच्छति ? Where are you coming from ?

३१. अहं { गृहतः / शालातः / तः } आगच्छामि । I am coming from school.

३२. भवान्/भवती कुत्र गच्छति ? Where are you going?

३३. अहं गृहं / पाठशालां / कार्यालयं / विपणिं गच्छामि । I am going to office.

३४. भवतः/भवत्याः विषये श्रुतवान् आसम् । I've heard about you.

३५. मेलनेन बहु सन्तोषः । Happy to meet you.

३६. भवन्तं/भवतीं कुत्राऽपि दृष्टवान् । I've seen you some where.

३७. भवान्/भवती संस्कृतशिबिरम् आगतवान्/आगतवती किम् ? Did you come for Samskrit conversation class ?

३८. तर्हि कुत्र दृष्टवान् ? Then where did I see you?

३९. आम्, तर्हि तत्रैव दृष्टवान् । Yes, then I saw you there only.

## ३. मित्रमेलनम् Meeting Friends

१. हरिः ओम् । कथम् अस्ति भवान्? Hello ! How are you ?

२. अहं सम्यक् अस्मि । I am fine.

३. एषु दिनेषु भवतः दर्शनमेव नास्ति । You are not seen these days.

४. एषु दिनेषु बहु कार्यव्यस्तः अस्मि । I am very busy these days.

५. कुत्र आसीत् भवती एतावन्ति दिनानि ? Where were you all these days ?

६. ह्यः एव भवतीं स्मृतवान् । Only yesterday I remembered you.

७. अहं शिमलानगरं गतवती आसम् । I had gone to Simla.

८. वयं सर्वे मिलित्वा एव तत्र गच्छामः । All of us will go there together.

९. परश्वः किम् ? Day after tomorrow?

१०. कस्मिन् समये ? At what time?

११. त्रिवादने किम् ? At three o' clock?

१२. त्रिवादने मम अन्यत् कार्यम् अस्ति । At three o' clock I've some other work.

१३. तर्हि चतुर्वादने गच्छामः । Then let us go at 4 o' clock.

१४. अस्तु । Okay.

१५. किमर्थं विलम्बः? Why are you late?

१६. प्रस्थानसमये मम यानस्य चक्रं भ्रष्टम् अभवत् । At the time of leaving my vehicle's tyre got punctured.

१७. वयं बहु कालं प्रतीक्षितवन्तः । We waited for a long time.

१८. क्षम्यतां, मम कार्यमेव न समाप्तम् । Sorry, my work wasn't over.

१९. तद्दिने भवान् किमर्थं न आगतवान् ? Why didn't you come on that day ?

२०. तद्विषये पूर्णतया विस्मृतवान् एव। I completely forgot about it.

२१. अन्ये सर्वे आगतवन्तः आसन् किम् ? Had everyone else come ?

२२. आम्, वृन्दां विहाय अन्ये सर्वे आगतवन्तः । Yes, everyone else except Vrinda had come.

२३. मम अपि बहु इच्छा आसीत् किन्तु न शक्तवान् । I also very much wanted to come but I couldn't.

२४. ह्यः भवतीं बहुवारं दूरभाषां कृतवती । I telephoned you several times yesterday.

२५. वयं सर्वे मम मातुलगृहं गतवन्तः । We had all gone to my maternal uncle's home.

२६. अद्य अत्र कथम् आगमनम् ? How did you come here today ?

२७. अत्र वित्तकोषे किञ्चित् कार्यम् आसीत् । I had some work here in the bank.

२८. अत्र त्वरितकार्यम् आसीत् अतः आगतवती । I came here because I had some urgent work.

२९. भवान् एव किम्? दूरतः न ज्ञातवान् एव । Is that you! I couldn't recognize you from far.

३०. बहु कृशः अभवत् भवान् । You've become very thin.

३१. मम विषमज्वरः जातः आसीत् । I had typhoid.

३२. आगच्छतु, गृहं गच्छामः । Come, let us go home.

३३. इदानीं किम् ? Now ?

३४. इदानीं किञ्चित् कष्टम् । It's slightly difficult now.

३५. किं मित्र! एवं वदति ? Oh friend! Why do you say so?

३६. किञ्चित् कालं तिष्ठतु । Wait for some time.

३७. इदानीं न शक्यते भोः । It's not possible now.

३८. किमर्थम् एवं त्वरा ? Why such hurry ?

३९. इतोऽपि समयः अस्ति खलु ? There is still sometime, isn't it ?

४०. नास्ति मित्र, इतः तत्र प्राप्त्यर्थम् एव एकघण्टा आवश्यकी ।
No my dear, an hour is needed even to reach there.

४१. यथा भवान् इच्छति । As you wish.

४२. अभिनन्दनम्! भवत्या उद्योगः लब्धः इति श्रुतम् । Congratulations! I heard you got a job.

४३. आम्, धन्यवादः । Yes, thank you.

४४. कुत्र उद्योगं करोति भवती ? Where do you work ?

४५. कस्याञ्चित् विज्ञापन-संस्थायां कार्यं करोमि । I am working in an advertising agency.

४६. मिष्टान्नं कदा ददाति ? When will you give sweets?

४७. मङ्गलवासरे गृहमेव आगच्छतु । Come home on Tuesday.

४८. इदानीं मया त्वरणीयम् । I must hurry now.

४९. तिष्ठतु सखि, काफी पिबामः । Wait friend, let's have coffee.

५०. अस्तु, पिबामः । Okay. let's drink.

५१. क्षम्यतां, स्थातुं मम समयः नास्ति । Sorry, I don't have time to stay.

५२. पुनः कदा मेलिष्यामः ? When shall we meet again ?

५३. श्वः सायं मेलिष्यामः किम् ? Shall we meet tomorrow evening ?

५४. आम्, तत्रैव आगमिष्यामि । Yes, I'll come there.

५५. भवतः नूतनं गृहं कुत्र अस्ति ? Where is your new residence ?

५६. एषः मम गृहसङ्केतः । This is my residential address.

५७. ओहो! मम भगिन्याः गृहसमीपे अस्ति । Oh! It's near my sister's home ?

५८. मम पत्रं प्राप्तवान् किम् ? Did you get my letter ?

५९. आम्, इदानीमेव प्राप्तवान् । Yes, I got it just now.

६०. अत्र कति दिनानि तिष्ठति भवान्? For how many days are you staying here ?

६१. इतोऽपि दिनद्वयम् अस्मि । I am here for two more days.

६२. तर्हि भवन्तं गृहे एव पश्यामि । Then I'll see you at home.

६३. भवतः समीपे सम्भाषणीयम् अस्ति । I have to talk to you.

६४. यदा कदापि आगच्छतु । Come at any time.

६५. मोहनस्य दुर्घटना अभवत् इति श्रुतवान् । I heard Mohan met with an accident.

६६. आम्, सः स्तोकात् मुक्तः । Yes, he had a narrow escape.

६७. तेन सह मिलितवान् किं भवान् ? Did you meet him ?

६८. कस्मिन् चिकित्सालये अस्ति सः? In which hospital is he admitted ?

६९. सः लोहियाचिकित्सालये अस्ति। He is in the Lohia hospital.

७०. एतां वार्तां श्रुतवती किम् ? Did you hear this news ?

७१. चिन्तां मा करोतु, सर्वं सम्यक् भविष्यति । Don't worry, everything will be fine.

७२. भवती अपि एतत् अङ्गीकरोति किम् ? Do you also agree with this ?

७३. भवान् अपि कथं विश्वासं कृतवान् ? How could you also believe it ?

७४. तस्य कथनशैल्या एव अहं प्रभावितः । I was impressed by the way he spoke.

७५. सुलभतया तस्य जाले पतितवान् । Easily fail into his trap.

७६. एवं भवति कदाचित् । Sometimes it happens.

७७. अस्माकं मेलनानन्तरं बहु कालः अतीतः । We are meeting after a long time.

७८. समयः कथम् अतिशीघ्रम् अतीतः ! How quickly time has passed !

७९. युक्ते समये आगतवान् । You have come at the right time.

८०. किञ्चित् कालं भवतः यानं ददाति किम् ? Will you lend me your vehicle for some time ?

८१. इदानीं मया अपि अन्यत्र गन्तव्यम् अस्ति । I too have to go out now.

८२. अहं शीघ्रं प्रत्यागमिष्यामि । I'll come back quickly.

८३. कदा प्रत्यागमिष्यति ? When will you come back?

८४. अर्धघण्टाभ्यन्तरे आगच्छामि । I'll be back in half an hour.

८५. याने तैलं नास्ति । There is no petrol in the vehicle.

८६. एवं किम् ? Is that so ?

८७. चिन्ता नास्ति । Don't worry.

८८. परिहासाय उक्तवान् मित्र । I was merely joking friend.

८९. अन्यथा मा चिन्तयतु । Don't take it otherwise.

९०. एकनिमेषस्य विलम्बः चेत् अहम् अगमिष्यम् । Had you been late by a minute I would've gone.

९१. एषः एकः आगत्य सर्वदा पीडयति । This person always pesters me.

९२. सः गतवान् किम् ? Did he go ?

९३. भवन्तं द्रष्टुं सः पुनः आगच्छति खलु ? He'll come again to see you, won't he ?

९४. सः विश्वासयोग्यः किम् ? Is he trustworthy ?

९५. वक्तुं न शक्यते । Can't say.

९६. भवान् आगच्छति किम् अस्माभिः सह ? Are you coming with us ?

९७. आगच्छतु, किञ्चित् अटित्वा आगच्छामः । Come, let's go for a walk.

९८. शीतपेयं पाययति किं भवान् ? Will you buy me a cold drink?

९९. शीतपेयं मास्तु पयोहिमं खादामः । Not cold drink let's eat ice-cream.

१००. शीघ्रं गच्छामः भोः नो चेत् माता तर्जयति । Let's go quickly otherwise mother will scold.

१०१. कथं गच्छति भवती तत्र ? How will you go there ?

१०२. अहं पादाभ्यां गच्छामि । I will walk.

१०३. अहमपि किञ्चिद्दूरं भवत्या सह आगच्छामि । I will also come with you for some distance.

## ४. प्रयाणम् Journey

१. इतः विकासपुरीं गन्तुं लोकयानं लभ्यते किम् ? Is there any bus available from here to go to Vikaspuri ?

२. आम्, लभ्यते । Yes, it is available.

३. जनकपुरी लोकयानस्य का संख्या ? Which bus goes to Janakapuri ?

४. २७७,६५ लोकयानद्वयमपि जनकपुरीं गच्छति । Bus number 277 and 65 both go to Janakapuri.

५. तस्मिन् लोकयाने महान् सम्मर्दः अस्ति । There is quiet a crowd in that bus.

६. तस्मिन् लोकयाने संख्याफलकं वा नामफलकं वा किमपि नास्ति । There is no numberplate or nameplate on that bus.

७. इदानीम् एव एकं तीव्र-गति-लोकयानं गतम् । A superfast bus just went.

८. शीघ्रम् आगच्छतु, लोकयानं प्रस्थितम् ।Come fast, the bus has started.

९. वातायनसमीपे रिक्तं स्थलम् अस्ति । There is a vacant place near the window.

१०. कदा वा निर्गच्छति एतत् लोकयानम्? When will this bus leave ?

११. निर्गमनसमयः दशाधिक-षड्वादनम् अस्ति । 6.10 is the departure time.

१२. अग्रे गच्छतु । Go forward.

१३. परीवर्तं ददातु । Give change, please.

१४. अग्रिम-स्थानके अवतरणीयं किम् ? Do we get off at the next stop ?

१५. अहं यात्रापत्रं क्रीणामि । I am buying the ticket.

१६. गिरिनगरार्थं यात्रापत्रद्वयं ददातु । Give two tickets for Girinagar.

१७. शीघ्रम् अवतरतु । Get down quickly.

१८. बहु दूरे अस्ति किम् ? Is it very far ?

१९. इतः केवलं दशनिमेषाणां मार्गः । It is just ten minutes distance.

## रेलयानम् Train

२०. यात्रापत्रं कुत्र क्रेतव्यम् ? Where should I buy a ticket ?

२१. यात्रापत्रस्य क्रयण-स्थानं तत्र अस्ति पश्यतु । See, the ticket selling counter is there.

२२. तत्र बहु दीर्घा अनुपङ्क्तिः अस्ति। A very long queue is there.

२३. आरक्षणस्य प्रार्थनापत्रं कुत्र लभ्यते ? Where is the reservation form available ?

२४. पृच्छाविभागे पृच्छामः । Let us ask at the enquiry counter.

२५. दशमदिनाङ्कस्य कृते आरक्षणं न लब्धम् एव भोः । Reservation was not available for the tenth.

२६. पञ्च स्थानकप्रवेशकानि ददातु । Give five platform-tickets please.

२७. आरक्षणं निश्चितम् अभवत् किम्? Has the reservation been confirmed?

२८. न, इतोऽपि प्रतीक्षा-सूच्याम् अस्ति । No, it is still in the waiting list.

२९. भवत्याः यान-कक्षस्य कः क्रमाङ्कः? What is your coach number ?

३०. भवतः आसनक्रमाङ्कः कः ? What is your seat number ?

३१. मम आसनक्रमाङ्कः नवविंशतिः अस्ति । My seat number is 29.

३२. जी. टी. यानस्य घण्टात्रयस्य विलम्बः । G.T. Express is late by three hours.

३३. भवतां कति यानपेटिकाः सन्ति ? How many suit-cases do you have ?

३४. बहु अधिकवस्तूनि सन्ति । The luggage is too much.

३५. भारवाहकः आवश्यकः एव । A porter is very neces - sary.

३६. धनविषये जागरूकः भवतु । Be careful about money.

३७. सर्वं स्वीकृतवान् किल ? You have taken every thing, haven't you ?

३८. भवान् शीघ्रं न गच्छति चेत् यानं न लभ्यते । You won't get the train if you don't go quickly.

३९. यात्रापत्रस्य किं मूल्यम् ? How much does the ticket cost?

४०. यात्रापत्रनिरीक्षकं निवेदयामः । Let us request the ticket-checker.

४१. यानम् अत्र कियत्-कालं तिष्ठति ? How long does the train stop here ?

४२. निमेष-त्रयं केवलम् । Only for three minutes.

४३. यानं देहलीं कस्मिन् समये प्राप्नोति ? At what time does the train reach Delhi ?

४४. दशवादने प्राप्नोति । It reaches at 10 o' clock.

४५. इतोऽपि घण्टाद्वयम् अस्ति । There are still two hours.

४६. किञ्चित् समञ्जनं कुर्मः । Let us adjust a little.

४७. कृपया सर्वबन्धकं स्वीकरोतु । Please, take the hold-all.

४८. एतत् व्यजनं न चलति । This fan doesn't work.

४९. वातायनम् उद्घाटयति किम् ? Will you open the window?

५०. अवश्यम् । Sure.

## ५. प्रवासतः प्रतिनिवर्तनम् On Arrival

१. कदा आगतवती ? When did you come?

२. अद्य प्रातः आगतवती । I came this morning.

३. केन यानेन आगतवती ? By which train did you come ?

४. अहं हिमाचल-एक्सप्रेस यानेन आगतवती । I came by the Himachal-express.

५. कथम् आसीत् प्रवासः ? How was the journey ?

६. उत्तमम् आसीत् । It was fine.

७. कति दिनानां प्रवासः आसीत् ? How many days did it take ?

८. दशदिनानाम् । Ten days.

९. तत्र अहं दिनत्रयं स्थितवती । I stayed there for three days.

१०. एकाकिनी गतवती किम् ? — Did you go alone ?

११. न, अहं मम परिवारेण सह गतवती । — No, I went with my family.

१२. बहु श्रान्तः अस्मि भोः । — I am very tired.

१३. मार्गे दुर्घटना अभवत् । — There was an accident on the way.

१४. विशेषतया कोऽपि न व्रणितः । — No one was seriously injured.

१५. लोकयानेन गच्छामः । — Let us go by bus.

१६. कः तदर्थं प्रतीक्षते भोः ? — Who waits for that?

१७. त्रिचक्रिकया एव गच्छामः । — Let us take a three wheeler.

१८. कदा प्रस्थितवान् ? — When did you start ?

१९. परह्यः रात्रौ प्रस्थितवान् । — I started day before yesterday at night.

२०. किं सर्वं दृष्टवान् ? — What places did you see?

२१. गङ्गोत्री बहु सुन्दरी अस्ति भोः। — Gangotri is very beautiful.

२२. सः जलप्रपातः नाम महत् अद्भुतम् । — That waterfall is just fantastic.

२३. तत् अहं द्रष्टुं न शक्तवती । — I couldn't see that.

२४. दीपावलीकारणतः याने महान् सम्मर्दः आसीत् । — Due to Deepavali the train was very much crowded.

२५. अविस्मरणीयः प्रवासः आसीत् । — It was a memorable journey.

## ६. छात्राः — Students

१. कस्मिन् महाविद्यालये पठति भवती ? — In which college do you study ?

२. अहं विश्वेश्वरैय्य-अभियान्त्रिक-महाविद्यालये पठामि । I study in the Vishweshwaraiya Engineering College.

३. अस्माकं भौतिकशास्त्रस्य अध्यापकः उत्तमः अस्ति । Our physics teacher is very good.

४. प्रथमकालांशं न आगतवान् ? You did not come for the first period ?

५. अद्य उत्थाने विलम्बः अभवत् । I got up late today.

६. लोकयानं न प्राप्तम् । I couldn't get the bus.

७. अर्थशास्त्रस्य व्याख्याता न आगतवान् । Economics lecturer has not come.

८. अद्य महाविद्यालये परिचर्चा-स्पर्धा अस्ति । Today there is a debate-competition in the college.

९. भवती भागं गृह्णाति किम् ? Are you participating ?

१०. न, मम सखी भागं गृह्णाति । No, my friend is participating.

११. एतत् पुस्तकम् अद्य प्रत्यर्पणीयं भोः, नो चेत् दण्डः दातव्यः भवेत्। I should return this book today, otherwise I'll have to pay fine.

१२. अद्य चलच्चित्रं द्रष्टुं गच्छामः किम् ? Shall we go for a movie today ?

१३. श्वः जीवशास्त्रस्य प्रात्यक्षिक-परीक्षा अस्ति सखे । Tomorrow we have Biology practical exam, friend.

१४. भवत्याः टिप्पणीं ददाति किम् ? Will you give me your notes?

१५. ह्यः एव गिरीशः स्वीकृतवान् । But Girish took them away yesterday.

१६. अद्य गृहे एव त्यक्त्वा आगतवती । Again I left them at home today.

१७. तद्दिने अहं वर्गं न आगतवान् आसम् । I had not come to class on that day.

१८. एकनिमेषार्थं लेखनीं ददातु मित्र । Please give me your pen for a minute friend.

१९. प्रतिदातुं मा विस्मरतु । Don't forget to give it back.

२०. आगच्छतु भोः क्रीडामः । Come on, let's play.

२१. जोशीमहोदयस्य कक्ष्या अस्ति किम् अद्य ? Do we have Mr. Joshi's class today ?

२२. पदवी त्रिनवतितमे वर्षे समापिता किम् ? Did you complete graduation in the year 1993 ?

२३. सम्यक् न स्मरामि भोः । I don't remember well.

२४. एतां दीर्घकथां पठितवान् किम् ? Did you read this novel?

२५. बहु पूर्वमेव पठितवान् । I read it long back.

२६. अद्य कक्ष्याः न भविष्यन्ति । Today there won't be any classes.

२७. प्राचार्यः बहु कठोरः अस्ति भोः । The Principal is very strict.

२८. परीक्षा लेखनीया चेत् ७०% उपस्थितिः अनिवार्या एव । 70% attendance is compulsory if you want to appear for the examination.

२९. वार्षिकोत्सवे वयम् एकं संस्कृतनाटकं कुर्मः । We are staging a Samskrit-drama in the annual function.

३०. श्वः च्छात्रसंघस्य निर्वाचनं भविष्यति । Tomorrow there will be elections for the student's council.

३१. एतस्मिन् वर्षे पाठनशुल्कं वर्धितम् अस्ति । This year the tuition-fees have been increased.

## ७. परीक्षा Examination

१. परीक्षारम्भः कदा इति ज्ञातं किम्? Do you know when the examination begins?

२. आं, वेलापत्रिका ह्यः एव आगता । Yes, the time-table came

just yesterday.

३. प्रश्नपत्रयोः मध्ये अवकाशः अस्ति किम् ? Is there any gap between two papers?

४. केवलं दिनद्वयस्य अस्ति । Only two days.

५. परीक्षा अग्रे नीता । The examination has been postponed.

६. सज्जता कथम् अस्ति ? How is the preparation?

७. पठितं किमपि न स्मरामि भोः । I don't remember anything that I read.

८. तृतीय-पत्रस्य पाठ्यांशः एव न समाप्तः । The portions of the third paper have not been completed.

९. प्रवेशपत्रं परश्वः लप्स्यते । The admission card will be given day after tomorrow.

१०. परीक्षासमयः कः ? What time is the examination ?

११. प्रातः अष्टतः दशवादनम् । From 8 to 10 in the morning.

१२. किं परीक्षा-केन्द्रं प्राप्तवती भवती ? Which examination centre did you get ?

१३. केन्द्रं मम गृहस्य समीपे अस्ति । The centre is near my house.

१४. प्रश्नपत्रं कथम् आसीत् ? How was the question-paper ?

१५. अतीव-सुलभम् आसीत् । It was very easy.

१६. बहु क्लिष्टम् आसीत् । It was very difficult.

१७. सामान्यम् आसीत् । It was alright.

१८. समयः अपर्याप्तः अभवत् । The time was not enough.

१९. प्रश्नेषु विकल्पः एव न आसीत् । There was no option among the questions.

२०. अहं प्रश्नद्वयस्य उत्तरं लेखितुं न शक्तवती । I could not write answers of two questions.

२१. प्रात्यक्षिक-परीक्षा समाप्ता । The practical-exam is over.

२२. प्रात्यक्षिक-परीक्षायाः परीक्षकः उत्तमः आसीत् । The examiner for practical-exam was a nice man.

२३. मौखिक-परीक्षा कथम् अभवत् ? How was the viva-voce ?

२४. सम्यक् न आसीत् । Not very good.

२५. फलितांशः कदा प्रकटितः भविष्यति ? When will the result be declared ?

२६. इतोऽपि एक मासः अस्ति । There's still one month.

२७. अग्रिम-सप्ताहे प्रकटितः भविष्यति । It will be declared in the next week.

२८. प्रतिशतं कति अङ्काः प्राप्ताः ? How many percent marks did you get ?

२९. मम ८०% अङ्काः आगताः । I got 80% marks.

३०. सः एकस्मिन् विषये अनुत्तीर्णः । He has failed in one subject.

३१. अङ्कद्वयेन मम प्रथम-स्थानं गतम् । I lost the first rank by two marks.

३२. तस्य फलितांशः निरुद्धः अस्ति । His result has been withheld.

३३. सा एतस्य पत्रस्य पुनर्मूल्याङ्कनार्थम् आवेदनं करिष्यति । She is applying for revaluation of this paper.

३४. इतःपरं मासद्वयस्य विरामः । Two months' holidays from now on.

३५. अग्रिमवर्षे अहं सम्यक् अध्ययनं करिष्यामि । Next year I will study well.

# ८. चलच्चित्रम्  Film

१. तत् नूतनं चलच्चित्रं दृष्टवती किम् ? Did you see the latest film ?

२. परह्यः एव वयं दृष्टवन्तः । We saw it the day before yesterday.

३. चित्रगृहं पूर्णम् आसीत् । The theatre was full.

४. वयं प्रवेशकानि अपि न प्राप्तवन्तः । We couldn't even get the tickets.

५. छायाचित्रणं बहु सुन्दरम् अस्ति । The photography is very beautiful.

६. कथा सामान्या एव । The story is ordinary.

७. नायकस्य अभिनयः अद्भुतः अस्ति । Hero's acting is fantastic.

८. सङ्गीतं श्रुतिमधुरम् अस्ति । Music is very melodious.

९. अहम् एतत् चतुर्थवारं पश्यन् अस्मि । I am seeing this for the fourth time.

१०. सः बहु प्रसिद्धः दिग्दर्शकः । He is a very famous director.

११. नूतनं किमपि न आसीत् । There was nothing new.

१२. बहु जामितकारकम् आसीत् । It was very boring.

१३. एतस्य चलच्चित्रस्य कृते सा सर्वोत्तम-अभिनेत्री इति पुरस्कारं प्राप्तवती । She got the best actress award for this film.

१४. मह्यं विनोदपूर्णम् अथवा रहस्यमयं चलच्चित्रं रोचते । I like comedy or suspense films.

१५. एषः मम प्रियतमः अभिनेता । This is my favourite actor.

१६. एतस्याः सर्वाणि चलच्चित्राणि काल्पनिक-विज्ञानकथाः भवन्ति । All her films are science fictions.

१७. युद्धकलाविषयकं बहु आकर्षकं चलच्चित्रम् अग्रिममासे आगमिष्यति । A very interesting film on martial-arts will be released next month.

१८. अहम् अवश्यं तत् द्रक्ष्यामि । I will certainly see that.

## ९. शिक्षकाः Teachers

१. प्राचार्यः आगतः किम् ? Has the Principal come?

२. अस्मिन् वर्षे परीक्षायाः आरम्भः मार्चमासे भविष्यति । This year the examination commences in March.

३. गणितस्य अध्यापकः अस्ति किम् इति पश्यतु । See if the maths teacher is there.

४. परश्वः विरामः भविष्यति । Day after tomorrow will be a holiday.

५. भवतः विभागे कति च्छात्राः सन्ति ? How many students are there in your department ?

६. मम विभागे त्रिंशत् छात्राः सन्ति । There are 30 students in my department.

७. भवतः वेतनश्रेणी का ? What is your pay-scale ?

८. वार्तापत्रं पठितवान् किम् ? सर्वकारेण अस्माकम् अभियाचनाः अङ्गीकृताः । Did you read the newspaper? The Govt. has accepted our demands.

९. त्रिंशत् प्रतिशतम् अधिवेतनम् उद्घोषितम् अस्ति । 30% bonus has been announced.

१०. एतस्य नियमस्य अन्वयः अग्रिमवर्षतः भविष्यति । This rule will be implemented from the next-year.

११. परीक्षा-विभागस्य उत्तरदायित्वं मम अस्ति । I am in-charge of the examination department.

१२. क्रीडा-विभागस्य प्रमुखः कः अस्ति ? Who is the head of the sports department ?

१३. विज्ञानकार्यशाला आयोजनीया अस्ति । We have to organise a science workshop.

१४. आन्तर्शालेय-नृत्यस्पर्धायाम् अस्माकं छात्राः प्रथम-पुरस्कारं प्राप्तवन्तः । Our students got the first prize in the inter-school dance competition.

१५. अग्रिमे रविवासरे पालक-शिक्षकमेलनं भविष्यति । Parent-teacher meeting will be on next Sunday.

१६. एतस्य मातरम् आह्वयिष्यामि । I'll call his mother.

१७. अहं विरामस्य निवेदनपत्रं दत्तवान् अस्मि । I have given application for leave.

१८. सः अद्य अर्ध-दिनस्य विरामं स्वीकृतवान् । He has taken a half-day leave today.

१९. लिपिकारः अद्य न आगतवान् एव । Again today the clerk has not come.

२०. इदानीं भवतः कालांशः अस्ति किम्? Do you have a class now?

२१. न, इदानीम् अहं कार्यरहितः अस्मि । No, I'm free now.

२२. संशयः अस्ति चेत् पृच्छतु । If you have any doubt please ask.

२३. ज्ञातं किम् ? Have you understood ?

२४. टिप्पणीं लिखितवन्तः किम् ? Have you taken notes?

२५. अद्य एतावदेव पर्याप्तम् । It is enough for today.

२६. एतस्य अनुच्छेदस्य अन्ते समापयामः । Let us stop at the end of this paragraph.

२७. कृपया, पुनः एकवारं वदतु । Please, say it once again.

२८. श्वः कक्ष्या-आगमनतः पूर्वम् एतत् पठित्वा आगच्छतु । Read this well before coming to class tomorrow.

२९. एतत् अहं न ज्ञातवान् । I didn't understand this.

३०. किं भोः सम्यक् पठति खलु ? Hey ! You study well, don't you ?

३१. भवान् भवतः 'विशेषकार्यम्' इतोऽपि न दत्तवान् । You have not yet submitted your assignment.

३२. प्रश्नपत्रिका सज्जीकृता किम् ? Have you prepared the question paper ?

३३. आम्, आरम्भं कृतवान् अस्मि । Yes, I have started.

३४. एषः एकम् अपि प्रश्नं सम्यक् न उत्तीर्णवान् । He has not answered a single question correctly.

३५. कोऽपि उत्तरं जानाति किम् ? Does anyone know the answer ?

३६. किं भोः कोलाहलः ? Hey, what's the noise about ?

३७. इदानीन्तन-च्छात्रास्तु ! The students these days!

३८. एतस्य वर्षस्य फलितांशः कथम् अस्ति ? How is the result this year ?

३९. गतवर्षस्य अपेक्षया उत्तमम् । Better than last year's.

४०. सः कथम् एतावतः अङ्कान् प्राप्तवान् ? How did he get such high marks ?

४१. परीक्षकाणाम् औदार्यम् । Examiner's large heartedness.

४२. ग्रीष्मविरामस्य आरम्भः कदा ? When does the summer vacation begin ?

४३. साक्षात्कारार्थं पञ्चत्रिंशत् जनाः आगतवन्तः । 35 people have come for the interview.

## १०. स्त्रियः Women

१. गृहकार्यं समाप्तं किम् ? Have you finished your household chores ?

२. आम्, समाप्तप्रायम् । Yes, almost finished.

३. गतानि द्वित्राणि दिनानि कुत्र आसीत् भवती ? Where were you for last two three days ?

४. अहं मातृगृहं गतवती । I had gone to my mother's place.

५. एषु दिनेषु श्यामलया मिलितवती किम् ? Did you meet Shyamala recently?

६. मम प्रातः आरभ्य बहु कार्याणि । I've had a lot of work since morning.

७. कर्मकरी अद्य पुनः न आगतवती । Again today the maid-servant didn't come.

८. अतिथयः श्वः आगमिष्यन्ति । Guests will come tomorrow.

९. अद्य शाकविपणिं गच्छामः किम् ? Shall we go to the vegetable market today ?

१०. अद्य मम समयः नास्ति भोः श्वः गमिष्यामः । I don't have time today let's go tomorrow.

११. अग्रिम-मासे वयं वस्त्रप्रक्षालनयन्त्रं क्रेष्यामः । Next month we will buy a washing machine.

१२. समीपे एकः नूतनः सर्ववस्तु-आपणः उद्घाटितः अस्ति । A new departmental store has opened nearby.

१३. रमायाः पुत्र्याः विवाहः निश्चितः इति श्रुतवती । I heard that Rama's daughter's marriage is fixed.

१४. अद्य आरभ्य तस्मिन् आपणे काचपात्राणां न्यूनमूल्येन विक्रयणम् अस्ति । I From today there is a sale of glass wares in that shop.

१५. किञ्चित् शर्करां ददाति किम् ? Would you lend me some sugar ?

१६. एतस्य पाककृतिं मां वदति किम् ? Would you tell me it's recipe ?

१७. आगच्छतु, देवालयं गच्छामः । Come, let's go to the temple.

# ११. वेषभूषणानि Dress, Jewellery

१. एतत् युतकं सुन्दरम् अस्ति । This shirt is very nice.

२. एतत् पादत्राणं नूतनं किं मित्र ? Is this a new pair of shoes, dear friend ?

३. एतां शाटिकां कुत्र क्रीतवती ? Where did you buy this saree ?

४. अञ्चलः कथम् अस्ति ? How is the 'palloo'?

५. एतस्याः शाटिकायाः अनुरूपः चोलः एव न लब्धः । I could not get a matching blouse for this saree.

६. भवतः ऊरुकस्य विन्यासः विशिष्टः एव भोः । Your trouser's cut is stylish.

७. अत्याधुनिकः विन्यासः मित्र । It is the latest fashion dear.

८. मम समीपे अपि एतादृशं कर्णाभरणम् अस्ति । I too have a pair of earrings like this.

९. शाटिकायाः परिणाहः बहु न्यूनः । The width of this saree is very less.

१०. एषः वर्णः भवत्याः युज्यते । This colour suits you.

११. एतस्य स्वेदकस्य कृते कियत् दत्तवान् ? How much did you pay for this sweater ?

१२. अहं नूतनम् ऊरुकं क्रेतुम् इच्छामि । I want to buy new trousers.

१३. तस्य केशविन्यासं पश्यतु । See, his hairstyle.

१४. बहु सुन्दरमस्ति खलु एतत् ? This is very beautiful, isn't it?

१५. शाटिकया सा प्रौढा इव दृश्यते । The saree makes her look older.

१६. कङ्कणस्य विन्यासः आकर्षकः अस्ति ।The style of this bangle is very attractive.

१७. तादृशी शाटिका आवश्यकी । I need a saree like that.

## १२. कार्यालयः Office

१. अत्र हस्ताङ्कनं करोतु । Please, sign here.

२. आगामि-सप्ताहे मां पश्यतु । Please, see me next week.

३. कार्यालये भवान् कस्मिन् स्थाने नियुक्तः ? What is your designation in the office ?

४. अहं विक्रयणविभागस्य व्यवस्थापकः अस्मि । I am manager of the sales department.

५. भवान् कति दिनानां विरामं स्वीकरोति ? How many days' leave are you taking ?

६. प्रतिदिनं भवान् विलम्बेन आगच्छति । You come late every day.

७. कार्यालयस्य समयः समाप्तः, श्वः आगच्छतु । Office time is over, please come tomorrow.

८. आयकर-विभागतः पत्रम् आनीतं किम् ? Have you brought the letter from the IT department ?

९. एतस्य प्रतिलिपिं सर्वेभ्यः प्रेषयतु । Send Xerox copy of this to all.

१०. तत् पत्रं कदा ददाति ? When will you give that letter ?

११. पञ्चनिमिषेषु कृत्वा ददामि । I'll do it in 5 minutes and give.

१२. सः विरामं स्वीकृतवान् अस्ति । He has taken leave.

१३. तं देयादेशं वित्तकोषे निवेशितवान् किम् ? Did you deposit that cheque in the bank ?

१४. एतद्विषये श्वः मां पुनरपि स्मारयतु । Remind me about this tomorrow again.

१५. एतेन आवेदनपत्रेण सह च्छायाचित्रमपि आवश्यकम् । A photograph is also necessary with this application.

१६. भवतः कृते सन्देशद्वयम् अस्ति । There are two messages for you.

१७. कृपया उपविशतु । Please be seated.

१८. तस्य स्थानपरिवर्तनम् अभवत् । He has been transferred.

१९. तस्याः पदोन्नतिः अभवत् । She has been promoted.

२०. मन्त्रिणा सह मेलनसमयः निश्चितः अभवत् किम् ? Has the appointment with the minister been confirmed ?

२१. श्वः सर्वेषां कार्यालयसदस्यानाम् एकं मेलनं भविष्यति । There is a meeting tomorrow of all the office staff.

२२. मेलनस्य समयः कः ? What is the time of the meeting ?

२३. सिन्हामहोदयः भवन्तम् आहूतवान् । Mr. Sinha has called you.

२४. सः कदा आगमिष्यति ? When will he come?

२५. अस्तु, परिशीलयामः । Okay. let us think over it.

२६. सा सञ्चिका कस्य समीपे अस्ति ? Who has that file?

२७. आगच्छतु, चायं पिबामः । Come, let's drink tea.

२८. भोजनविरामः कदा ? When is the lunch time?

२९. अस्माकम् अधिकारी शीघ्रकोपी अस्ति । Our officer is short tempered.

३०. सः बहु समयपालकः । He is very punctual.

३१. लेखा-परीक्षणं कदा अस्ति ? When is the auditing?

३२. श्वः सर्वेषां कर्मचारिणां कार्यावरोधः भविष्यति । All the workers will be on strike tomorrow.

३३. तद्विषये अहं विस्मृतवान् एव । I just forgot about that.

३४. एतत् कस्य उत्तरदायित्वम् ? Whose responsibility is this?

३५. भवतः कार्येण अहं सन्तुष्टः अस्मि । I am satisfied with your work.

# १३. आरोग्यम् Health

१. कथम् अस्ति भवतः/भवत्याः स्वास्थ्यम्? How is your health ?

२. इदानीं सम्यक् अस्ति । It's all right now.

३. मम महती पादवेदना अस्ति । My legs are aching very much.

४. वैद्यः रक्तपरीक्षां कारयितुम् उक्तवान् । The doctor has told me to get a blood-test done.

५. श्वः उदरस्य क्षकिरणपरीक्षा करणीया भविष्यति। Tomorrow I've to get an X-ray of my stomach.

६. रक्तपरीक्षायाः परिणामपत्रं कदा प्राप्यते ? When can I get the result of the blood-test?

७. अस्थिभङ्गः कथम् अभवत्? How did this fracture happen?

८. सोपानतः पादः स्खलितः अतः पतितवान् । I slipped from the staircase and fell.

९. औषधबन्धं कदा निष्कासयन्ति ? When will the plaster be removed ?

१०. ह्यः बहुवारं वमनम् अभवत् । I vomited many times yesterday.

११. मम वमनशङ्का अस्ति । I feel like vomiting.

१२. वैद्यं दृष्टवान् किम् ? Did you see the doctor?

१३. किमर्थं तावत् क्षुवति ? Why do you sneeze so much ?

१४. मम धूलि-प्रत्यूर्जता अस्ति । I have dust allergy.

१५. अहम् अतीव-श्रान्तिम् अनुभवामि । I feel extremely tired.

१६. मुखस्य किम् अभवत् ? What happened to your face?

१७. पलाण्डु-प्रत्यूर्जता कारणतः विस्फोटम् अभवत् । Eruptions due to onion allergy.

१८. मम शिरः भ्रमति । I feel giddy.

१९. ज्वरः अस्ति किम् ? Do you have fever ?

२०. बहु कृशा अभवत् भवती । You have become very thin.

२१. मम स्वास्थ्यं सम्यक् न आसीत् । I was not well.

२२. प्रतिदिनं सूच्यौषधद्वयं स्वीकरणीयम् अस्ति । I've to take two injections every day.

२३. लवणं न्यूनं खादितुम् उक्तवती वैद्या । The lady-doctor has told me to eat less salt.

२४. सः चिकित्सालयं प्रवेशितः । He has been admitted to the hospital.

२५. तस्याः कृते कूपीत्रयं रक्तम् आवश्यकम् । She needs three bottles of blood.

२६. समये रोगस्य निदानम् अभवत् अतः सा रक्षिता । She is saved as the disease was diagnosed in time.

२७. मम मधुमेहः अस्ति इति वैद्यः उक्तवान् । The doctor said that I have diabetes.

२८. अहं होमियोपथी औषधानि एव स्वीकरोमि । I take only homeopathic medicines.

२९. एक-सप्ताहस्य औषधं दत्तवान् वैद्यः । The doctor has given medicine for a week.

३०. मम यकृते काऽपि समस्या अस्ति । There is some problem with my liver.

३१. तस्याः हृदयाघातः अभवत् । She had a heart attack.

३२. मम प्रातः आरभ्य स्वल्पा शिरोवेदना । I've slight headache since morning.

# १४. दूरभाषा Telephone

| | |
|---|---|
| १. हरिः ओम् ! | Hello ! |
| २. एतद् महेश-महोदयस्य गृहं किम् ? | Is this Mr. Mahesh's residence? |
| ३. एषा ३५१ ७६८९ अस्ति किम् ? | Is this 2351 7689 ? |
| ४. संस्कृत-भारत्याः कार्यालयः किम् ? | Is it Samskrit Bharati's office ? |
| ५. कः सम्भाषणं करोति ? | Who is speaking ? |
| ६. अहम् अरुणः वदामि । | I am Arun speaking. |
| ७. केन सह वक्तुम् इच्छति ? | With whom do you want to speak ? |
| ८. लतया सह वक्तुम् इच्छामि । | I want to speak to Lata. |
| ९. कृष्णः गृहे अस्ति किम् ? | Is Krishna at home ? |
| १०. क्षम्यतां, सः गृहे नास्ति । | Sorry, he is not at home. |
| ११. कृपया एतं सन्देशं तं सूचयति किम्? | Would you give him this message please ? |
| १२. आम्, एकं क्षणं तिष्ठतु । | Yes, please wait for a moment. |
| १३. तां दूरभाषां कर्तुं सूचयामि । | I'll tell her to ring you up. |
| १४. भवतः दूरभाषासङ्ख्या का ? | What is your phone number ? |
| १५. क्षम्यताम् , असम्यक् सङ्ख्या । | Sorry, wrong number. |
| १६. तस्य दूरभाषा व्यस्ता अस्ति । | His phone is engaged. |
| १७. अस्माकं दूरभाषा निष्क्रिया अस्ति । | Our phone is dead. |
| १८. किञ्चित् उच्चैः वदतु । | Please speak a little louder. |
| १९. स्थापयामि किम् ? | Shall I hang up ? |

२०. ह्यः बहुवारं दूरभाषां कृतवान् । कोऽपि न उन्नीतवान् । I called many times yesterday. Nobody picked up the receiver.

२१. वयं बहिः गतवन्तः । We had gone out.

२२. कृपया मोहनम् आह्वयति किम् ? Will you please call Mohan ?

२३. अस्तु, श्वः पुनः दूरभाषां करिष्यामि । Okay, I'll call again tomorrow.

२४. तस्याः समीपे मम दूरभाषासङ्ख्या नास्ति । She does not have my phone number.

२५. दूरभाषा-सङ्ख्यानिर्देशिका कुत्र अस्ति ? Where is the telephone directory ?

२६. दूरभाषाकेन्द्रस्य सङ्ख्या का ? What is the number of the Telephone exchange ?

## १५. वाणिज्यम् Commerce

१. पलाण्डुमूल्यं किम् ? What is the price of onion?

२. षट्रूप्यकाणि प्रति पादम् । Six rupees for 250 grams.

३. नारङ्गफलानि सन्ति किम् ? Do you have oranges ?

४. आम्, सन्ति । Yes, I have.

५. द्वादशकस्य किं मूल्यम् ? What is the price for a dozen ?

६. द्वादशकस्य विंशतिः रूप्यकाणि । Twenty rupees a dozen.

७. मह्यं द्वादशकद्वयं ददातु । Give me two dozens please.

८. १ किलो मुद्गदालं ददातु । Give me 1Kg green grams.

९. तण्डुलाः सम्यक् न सन्ति । The rice is not of good quality.

१०. एतत् बहु महार्हम् अस्ति । This is very costly.

